॥ सूर्यार्यास्तोत्रम् ॥

श्री गणेशाय नमः ॥

शुकतुण्डच्छवि सवितुश्चण्डरुचेः पुण्डरीकवनबन्धोः ।
मण्डलमुदितं वन्दे कुण्डलमाखण्डलाशायाः ॥ १॥

यस्योदयास्तसमये सुरमुकुटनिघृष्टचरणकमलोऽपि ।
कुरुतेञ्जलिं त्रिनेत्रः स जयति धाम्नां निधिः सूर्यः ॥ २॥

उदयाचलतिलकाय प्रणतोऽस्मि विवस्वते ग्रहेशाय ।
अम्बरचूडामणये दिग्वनिताकर्णपूराय ॥ ३॥

जयति जनानन्दकरः करनिकरनिरस्ततिमिरसङ्घातः ।
लोकालोकालोकः कमलारुणमण्डलः सूर्यः ॥ ४॥

प्रतिबोधितकमलवनः कृतघटनश्चक्रवाकमिथुनानाम् ।
दर्शितसमस्तभुवनः परहितनिरतो रविः सदा जयति ॥ ५॥

अपनयतु सकलकलिकृतमलपटलं सप्रतप्तकनकाभः ।
अरविन्दवृन्दविघटनपटुतरकिरणोत्करः सविता ॥ ६॥

उदयाद्रिचारुचामरहरितहयखुरपरिहितरेणुराग ।
हरितहय हरितपरिकर गगनाङ्गनदीपक नमस्ते ॥ ७॥

उदितवति त्वयि विकसति मुकुलीयति समस्तमस्तमितबिम्बे ।
न ह्यन्यस्मिन्दिनकर सकलं कमलायते भवनम् ॥ ८॥

जयति रविरुदयसमये बालातपः कनकसन्निभो यस्य ।
कुसुमाञ्जलिरिव जलधौ तरन्ति रथसप्तयः सप्त ॥ ९॥

आर्याः साम्बुपुरे सप्त आकाशात्पतिता भुवि ।
यस्य कण्ठे गृहे वापि न स लक्ष्म्या वियुज्यते ॥ १०॥

आर्याः सप्त सदा यस्तु सप्तम्यां सप्तधा जपेत् ।
तस्य गेहञ्च दीपञ्च पद्मा सत्यं न मुञ्चति ॥ ११॥

निधिरेश दरिद्राणां रोगिणां परमौषधम् ।

सिद्धि सकलकार्याणां गाथेयं संसृता रवेः ॥ १२॥

इति श्रीयाज्ञवल्क्यविरचितं सूर्यार्यास्तोत्रं सम्पूर्णम् ।